बृ.भ. एवं देवा अपीति॥ संक्षिप्तं दार्ष्टान्तिकं विवृणोति॥ सोमलोक इति॥ कथं पौनःपुन्येन विश्रान्तिः संपद्यते तत्राह॥ कर्मानुरूपमिति॥ दृष्टान्तवद्दार्ष्टा- अ. ८
२० न्तिके किमित्याप्यायनं नोक्तं तत्राह॥ तद्धीति॥ पुनःपुनर्विश्रामास्यनुज्ञानमिति यावत्॥ लोकद्वयप्रापकौ पन्थानावभिसंख्याख्यायधुनेरे तल्लोक-

एवं देवा अपि सोमलोके लब्धशरीरान्कर्मिणः उपकरणभूतान्पुनःपुनर्विश्रामयन्तः कर्मानुरूपं फलं प्रयच्छन्तस्तद्धि तेषामाप्यायनं सो-
मस्याप्यायनमिवोपभुञ्जते उपकरणभूतान्देवास्तेषां कर्मिणां यदा यस्मिन्काले तद्यज्ञदानादिलक्षणं सोमलोकप्रापकं कर्म पर्यवैति परि-
गच्छति परिक्षीयत इत्यर्थः॥ अथ तदा इममेव प्रसिद्धमाकाशमभिनिष्पद्यन्ते यास्ताः श्रद्धाशब्दवाच्या द्युलोकाग्नौ हुता आपः सोमाकार

तेषां यदा तत्पर्यवैत्यथेममेवाकाशमभिनिष्पद्यन्त आकाशाद्वायुं वायोर्वृष्टिं वृष्टेः पृथिवीं॥

परिणता याभिः सोमलोके कर्मिणामुपभोगाय शरीरमारब्धमम्मयं ताः कर्मक्षयाद्धिमपिण्ड इवातपसंपर्कात्प्रविलीयन्ते प्रविलीनाः सूक्ष्मा
आकाशभूता इव भवन्ति तदिदमुच्यते इममेवाकाशमभिनिष्पद्यन्त इति ते पुनः कर्मिणस्तच्छरीराः सन्तः पुरोवातादिना इतश्चामुतश्च
नीयन्तेऽन्तरिक्षगास्तदाह आकाशाद्वायुमिति वायोर्वृष्टिं प्रतिपद्यन्ते तदुक्तं पर्जन्याग्नौ सोमं राजानं जुह्वतीति ततो वृष्टिभूता इमां पृथिवीं
पतन्ति ते पृथिवीं प्राप्य व्रीहियवाद्यन्नं भवन्ति तदुक्तमस्मिँल्लोकेऽग्नौ वृष्टिं जुह्वतीति तस्या आहुतेरन्नं संभवतीति प्राप्तिप्रकारमाह॥ तेषामित्यादि-
ना॥ कथं चन्द्रस्थलस्खलितानां कर्मिणामाकाशतादात्म्यमित्याशंक्याह॥ यास्ता इति सोमाकारपरिणतत्वमेव स्फोरयति॥ याभिरिति॥ तत्सञ्ज्ञदितिद्रवीभ- रा.
वनयोग्यतां दर्शयति॥ अम्मयमिति॥ सा भाव्यापत्तिरुपपत्तेरिति न्यायेनाह॥ आकाशभूता इवेति॥ आकाशाद्वायुप्राप्तिप्रकारमाह॥ ते पुनरिति॥ अन्याधिष्ठिते पू- २०
१=अवरोहतामाकाशादिषु समानापत्तिः न तु स्वरूपापत्तिः कुतः उपपत्तेः नत्वन्यस्यान्यभावः स्वरूपेण संभवतीति=१
१=अवरोहतां जीवानां व्रीह्यादिषु अन्येन जीवेनाधिष्ठितेषु अवरोहणं कुतः यथाकाशादिषु कर्मादि विना ... =१

१= स्तश्च व्रीह्यादिषु संश्लेषयात्रं न तद्भावः कुतः यो यो ह्यन्नमत्ति यो रेतः सिंचति तद्भूय एव भवती यत्र न मुख्यो रेतः सिग्भावः संभवति चिरजातो हि प्राप्तयौवनो रेतः सिग्भवति
रेतः सिग्योगोऽथेति न्यायमाश्रित्याह॥ तेषु नरीति॥ योनेः शरीरमिति न्यायमनुसृत्याह॥ तत इति॥ उत्पन्नानां केषांचिद्दिश्यदिकारित्वमाह॥ लोकमिति॥ कर्मा
नुष्ठानानंतरं तत्फलभागित्वमाह॥ ततो धूमादिनेति॥ सोमलोके फलभोगानंतरं पुनरेतल्लोकप्राप्तिमाह॥ पुनरिति॥ पौनःपुन्येन परिवर्त्तनस्यावधिं स्

ते पुनः पुरुषाग्नौ हूयंते ऽन्नभूता रेतः सिचितस्तो रेतो भूता योषाग्नौ हूयंते ततो जायंते लोकं प्रत्युत्थायिनस्ते लोकं प्रत्युत्तिष्ठंतोऽग्निहोत्रादिक
र्मानुतिष्ठंति ततो धूमादिना पुनः सोमलोकं पुनरिमं लोकमिति त एवं कर्मिणोऽनुपरिवर्त्तते घटीयंत्रवच्चक्रीभूता बंभ्रमंतीत्यर्थः॥ उत्तरमा
र्गाय सद्यो मुक्तये वा यावद्ब्रह्मज्ञानं विदुरिति नुकामयमानः संसरतीत्युक्तं अथ पुनर्य्ये उत्तरं दक्षिणं चैतौ पंथानौ न विदुरुत्तरस्य दक्षिणस्य

ते पृथिवीं प्राप्यान्नं भवंति त एवमेवानुपरिवर्त्तंतेऽथ य एतौ पंथानौ न विदुस्ते कीटाः पतंगा यदिदं दंदशूकं॥ १॥ द्वितीयं ब्राह्म
णं॥ २॥

वा पथः प्रतिपत्तये ज्ञानं कर्म वा नानुतिष्ठंतीत्यर्थः ते किं भवंतीत्युच्यते ते कीटाः पतंगाः यदिदं यच्चेदं दंदशूकं दंशमशकमि
त्येतद्भवंति स्वहीयं संसारगतिः कष्टाऽस्यां निमग्नस्य पुनरुद्धार एव दुर्लभः तथा च श्रुत्यंतरं तानीमानि क्षुद्राण्यसकृदावर्तीनि भूता
नि भवंति जायस्व म्रियस्वेति॥ तस्मात्सर्वोत्साहेन यथाशक्ति स्वाभाविककर्मज्ञानहानेन दक्षिणोत्तरमार्गप्रतिपत्तिसाधनं शास्त्री
यं कर्म ज्ञानं वानुतिष्ठेदिति वाक्यार्थं स्वाचोक्तं चयति॥ उत्तरमार्गायेति॥ प्राक्कृज्ञानात्संसरणं षष्ठे पिव्याख्यातमित्याह॥ इति न्विति॥ स्थानद्वय
माहृत्य सहितमुक्त्वा स्थानानंतरं दर्शयति॥ अथेत्यादिना॥ स्थानद्वयात्तृतीये स्थाने विशेषं कथयति॥ स्वमिति॥ तृतीये स्थाने छांदोग्यश्रुतिसंवादयति॥
तथा चेति॥ अमुष्यागलेरिति कष्टत्वे परिशिष्टं वाक्यार्थमाचष्टे॥ तस्मादिति॥ सर्वोत्साहो वा कायचेतसां प्रयत्नः यदुक्तमस्यां निमग्नस्य पुनरुद्धारो दुर्लभो

अतोव्रीह्यादिभावादित्यर्थः॥तस्मादित्यविकृष्टात्संसारादित्यर्थः॥दक्षिणोत्तरमार्गप्राप्तिसाधनेयत्नसाम्यमाशंक्याह॥अत्रापीति॥पंचप्रश्नान्प्रस्तुत्य
किमितिप्रत्येकंतेषांनिर्णयोनकृतइत्याशंक्याह॥एवमिति॥निर्णीतप्रकारमेवसंगृह्णाति॥असावित्यादिना॥प्राथम्येननिर्णीतइतिसंबंधः॥देव
यानस्येत्यादिःपंचमःप्रश्नःसतुद्वितीयत्वेनदक्षिणादिमार्गप्रतिपत्तिसाधनोक्त्यानिर्णीतइत्यर्थः॥तेनैवमार्गद्वयप्राप्तिसाधनोपदेशेनैवेतियाव
त्॥मृतानांप्रजानांविप्रतिपत्तिःप्रथमःप्रश्नस्तस्यनिर्णयप्रकारमाह॥अग्नेरिति॥द्वितीयप्रश्नस्वरूपमनूद्यतस्यनिर्णीतत्वंप्रकटयति॥पुनरा



अतोवैखलुदुर्निष्प्रपतरंतस्माज्जुगुप्सेतेतिश्रुत्यंतरान्मोक्षायप्रयतेतेत्यर्थः॥अत्राप्युत्तरमार्गप्रतिपत्तिसाधनेएवमहान्यत्नःकर्तव्य
इतिगम्यतेएवमेवानुपरिवर्तंतइत्युक्त्वादेवंप्रश्नाःसर्वेनिर्णीताः॥असौवैलोकइत्यारभ्यपुरुषःसंभवतीतिचतुर्थःप्रश्नःयतिथ्या
माहुत्यामित्यादिःप्राथम्येनपंचमस्तुद्वितीयत्वेनदेवयानस्यवापथःप्रतिपदंपितृयाणस्यवेतिदक्षिणोत्तरमार्गप्रतिपत्तिसाधनक
थनेनतेनैवचप्रथमोप्यग्नेरारभ्यकेचिदर्चिःप्रतिपद्यंतेकेचिद्धूममितिविप्रतिपत्तिःपुनरावृत्तिश्चद्वितीयप्रश्नःआकाशादिक्रमे
णेमंलोकमागच्छंतीतितेनैवासौलोकोनसंपूर्यतेकीटपतंगादिप्रतिपत्तेश्चकेषांचिदितितृतीयोपिप्रश्नोनिर्णीतः॥३०॥१९॥इतिबृ
हदारण्यकेअष्टमाध्यायस्यद्वितीयंब्राह्मणं॥२॥सयःकामयेत॥ज्ञानकर्मणोर्गतिरुक्तातत्रज्ञानंस्वतंत्रंकर्मतुदैवमानुषवित्तद्वयाय
त्तंतेनकर्मार्थंवित्तमुपार्जनीयंतच्चाप्रत्यवायकारिणोपायेनेत्येतदर्थंमंथाख्यंकर्मारभ्यते

तिश्चेति॥आगच्छंतीतिनिर्णीतइत्युत्तरत्र
संबंधःतेनैवपुनरावृत्तेःसत्वेनैवेत्यर्थः॥अमुष्यलोकस्यासंपूर्तिर्हितृतीयःप्रश्नः॥सचद्वाभ्यांहेतुभ्यांप्रागुक्ताभ्यांनिर्धारितोभवतीतिभावः॥ ॥इत्यष्ट
मेद्वितीयंब्राह्मणं॥२॥ब्राह्मणांतरमवतार्यसंगतिमाह॥सयइति॥तत्रेतिनिर्धारणेसप्तमी॥कथंतर्हिवित्तोपार्जनंसंभवतितत्राह॥तत्रेति॥तदर्थंवित्त

ननु महत्त्वसिध्यर्थमिदं कर्मारभ्यते महत्स्यां प्राप्नुयामिति श्रुतेस्तत्कथमन्यथा प्रतिज्ञातमिति शंकते॥ महत्त्वेति॥ परिहरति॥ महत्त्वे चेति॥ उक्तेऽर्थे श्रुत्यक्षराणि योजयति॥ तदुच्यत इत्यादिना॥ स यो वित्तार्थी कामयेतेत्तस्येदं कर्मेति शेषः॥ यस्य कस्य चिद्वित्तार्थिनस्तर्हीदं कर्म स्यादित्याशंक्याह॥ कर्मण्यधिकृत इति॥ तत्र वित्तार्थं निपुंसीतेति यावत्॥ उपसदो नामेष्टिविशेषाः ज्योतिष्टोमे प्रवर्ग्याहः स्थितिशेषः॥ किं पुनस्तासु व्रतमिति तदाह॥ तत्र चेति॥ यदुपसत्सु

महत्त्वप्राप्तये महत्त्वे च सत्यर्थसिद्धं हि वित्तं तदुच्यते स यः कामयेत स यो वित्तार्थी कर्मण्यधिकृतो यः कामयेत किं महन्महत्त्वं प्राप्नुयां महान्स्यामित्यर्थः॥ तत्र मंथकर्मणो विधित्सितस्य कालो विधीयते उदगयन आदित्यस्य तत्र सर्वत्र प्राप्तावापूर्यमाणपक्षस्य शुक्लपक्षस्य तत्रापि सर्वत्र प्राप्तौ पुण्याहे अनुकूले आत्मनः कार्यसिद्धिकर इत्यर्थो द्वादशाहं यस्मिन्पुण्ये अनुकूले कर्म चिकीर्षति ततः प्राक्पुण्याहमेवारभ्य द्वा

स यः कामयेत महत्स्यां प्राप्नुयामित्युदगयन आपूर्यमाणपक्षस्य पुण्याहे द्वादशाहमुपसद्व्रती

दशाहमुपसद्व्रती उपसत्सु व्रतमुपसदिष्टिविशेषः उपसदः प्रसिद्धा ज्योतिष्टोमे तत्र च स्तनोपचयापचयहारेण पयोभक्षणं तद्व्रतं अत्र च तत्कर्माङ्गमुपसंहारात्केवलमिति कर्तव्यताशून्यं पयोभक्षणमात्रमुपादीयते॥ ननूपसद एव व्रतमिति यदा विग्रहस्तदा सर्वमितिकर्तव्यतारूपं ग्राह्यं भवति तत्कस्मान्न परिगृह्यत इत्युच्यते स्तनोपचयापचयाभ्यां पयोभक्षणं यजमानस्य प्रसिद्धं तदुपसद्व्रतमित्यर्थः॥ प्रकृतेपि तर्हि स्तनोपचयापचयाभ्यां पयोभक्षणं स्यादिति चेन्नेत्याह॥ अत्र चेति॥ मंथाख्यं कर्म सप्तम्यर्थः॥ तत्कर्मसु उपसद्रूपकर्माक्तिः केवलमित्यस्यैवार्थमाह॥ इतिकर्तव्यताशून्यमिति॥ समासांतरमाश्रित्य शंकते॥ नन्विति॥ कर्मधारयरूपं समासवाक्यं तदित्युक्तं॥ मंथाख्यस्य कर्मणः स्मार्तत्वादत्र श्रुत्युक्तानामुप

८२२

मंथकर्मणः स्मार्तत्वमाक्षिपति॥ नन्विति॥ परिसमूहनपरिलेपनाग्न्युपसमाधानादेः स्मार्तार्थस्याग्नेर्ज्यस्थानत्वादिपंश्रुतिः स्मृत्यनुवादिनीयुक्तातथा चैतत्कर्मभवत्सेवस्मार्तमितिपरिहरति॥ स्मृतीति॥ ननुश्रुतेर्नस्मृत्यनुवादित्वंवैपरीत्यादतोभवतीदंश्रौतमित्याशंक्याह॥ श्रौतत्वेहीति॥ यदीदंकर्मश्रौतंतदाज्योतिष्टोमेनास्यप्रकृतिविकृतिभावः स्यात्समग्रांगसंयुक्ताचप्रकृतिः विकलांगसंयुक्ताविकृतिः प्रकृतिविकृतिभावेचविकृतकर्मणः प्राकृतधर्मग्राहित्वादुपसदस्वव्रतमितिविविग्रहसर्वमितिकर्तव्यतारूपंशक्यंग्रहीतुं॥ नचात्रश्रौतत्वमस्तिपरिलेपनादिसंबंधात्॥ नचपूर्वभावि

स्मार्तत्वात्कर्मणः स्मार्तंहीदंमंथकर्मननुश्रुतिविहितंसत्कथंस्मार्तंभवितुमर्हतिस्मृत्यनुवादिनीहिश्रुतिरियंश्रौतत्वेहिप्रकृतिविकार भावस्तत्रप्राकृतधर्मग्राहित्वंविकारकर्मणोनत्विहश्रौतत्वमतएवचावसथ्याग्नावेतत्कर्मविधीयतेसर्वाचारत्स्मार्तंवेतिउपसद्व्रती

भूत्वौदुंबरेकं॰ सेचमसेवासर्वौषधंफलानीतिसंभृत्यपरिसमूह्यपरिलिप्याग्निमुपसमाधायपरिस्तीर्याव्रताज्यं॰ स॰

भूत्वापयोव्रतीसन्नित्यर्थः औदुंबरेउदुंबरवृक्षमयेकंसेचमसेवात्तस्येवविशेषणंकंसाकारेचमसाकारेवाऔदुंबरएवआकारेतुविकल्पोनात्रौदुंबरत्वेसर्वौषधंसर्वासामोषधीनांसमूहंयथासंभवंयथाशक्तिचसर्वाओषधीः समाहृत्य न्याः श्रुतेरुत्तरभाविस्मृत्यनुवादित्वासिद्धिः॥ तस्मात्सेकालविषयत्वाभ्युपगमादितिभावः॥ मंथकर्मणः स्मार्तत्वेलिंगमाह॥ अतएवेति॥ तत्रैवहेत्वंतरमाह॥ सर्वाचेति॥ मंथगतेतिकर्तव्यतायाआवृदित्युच्यते॥ उपसदस्वव्रतमितिविग्रहासंभवादुपसत्सुव्रतमितिअस्मदुक्तंसिद्धमित्युपसंहर्तुमितिशब्दः॥ पयोव्रतीसन्वक्ष्यमाणेनकर्मणाजुहोतीतिसंबंधः॥ तांम्रमौदुंबरमितिशंकांवारयति॥ वृक्षमयइति॥ तस्यैवेतिप्रकृतपात्रपरामर्शः औदुंबरत्वेपिविकल्पमाशंक्या

५=संमार्जनेनांजनेनसेकेनोल्लेखनेनच गवांचपरिवासेनभूमिः शुध्यतिपंचभिः=
असंभवादशक्यत्वाच्चसर्वौषधंसमाहृत्येतिअयुक्तमित्याशंक्याह॥यथासंभवमिति॥औषधीषुनियमंदर्शयति॥तत्रेति॥परिसंख्यांवारयति॥
अधिकेति॥इतिसंभृत्याग्नेतिशब्दस्यप्रदर्शनार्थत्वेफलितंवाक्यार्थंकथयति॥अन्यदपीति॥औषध्यादीनांसंभरणानंतरंपरिसमूहनादिक्रमेकिं

तत्रग्राम्याणांदशनियमेनग्राह्याः व्रीहियवाद्यावक्ष्यमाणाअधिकग्रहणेतुनदोषोग्राम्याणांफलानिचयथासंभवंयथाशक्तिचइतिश्रु
वं वः समस्तसंभारोपचयप्रदर्शनार्थः॥अन्यदपियत्संभरणीयंतत्संसंभृत्येत्यर्थः॥क्रमस्तत्रगृह्योक्तोद्रष्टव्यः॥परिसमूहनपरिलेपने
भूमिसंस्कारोग्निमुपसमाधायेतिवचनादावसथ्येग्नावितिगम्यतेएकवचनादुपसमाधानश्रवणाच्च॥विद्यमानस्यैवोपसमाधानंपरि

स्तृत्यपुंसानक्षत्रेणमंथं संनीयजुहोतियावंतोदेवास्त्वयिजातवेदस्तिर्यंचोघ्नंतिपुरुषस्यकामान्तेभ्योहंभागधेयंजुहो
मितेमातृप्ताः सर्वैःकामैस्तर्पयंतुस्वाहा॥यातिरश्चीनिपद्यतेहंविधरणीइतितांत्वाघृतस्यधारयायजेसंराधनीमहंस्वाहा
॥२१॥ स्तीर्यंदर्भानास्तृतास्मातेत्वात्कर्मणः स्थालीपाकावृत्परिगृह्यतेसयाज्यंसंस्कृत्यपुंसानक्षत्रेणप्रज्ञाम्नानक्षत्रेणपुण्याहसं
युक्तेनमंथंसर्वौषधफलपिष्टंतत्रौदुंबरेचमसेदधनिमधुनिघृतेचोपसिच्यैकयोपमंथन्योपसंमथ्यसंनीयमध्येसंस्थाप्यौदुंबरेणस्रु
वेणावापस्थाने प्रमाणमित्याशंक्याह॥क्रमइति॥तत्रेतिपरिसमूहनाद्युक्तिः॥होमाधारत्वेनत्रेताग्निपरिग्रहंवारयति॥अग्निमिति॥आवसथ्ये
ग्नौहोमइतिशेषः॥कथमेतावतात्रेताग्निपरित्यागस्तत्राह॥एकवचनादिति॥कथमुपसमाधानश्रवणंत्रेताग्निनिवारकंतत्राह॥विद्यमानस्येति॥
आहवनीयादेश्चाधेयत्वान्नप्रागेवसत्वमितिभावः॥मध्येसंस्थाप्याग्नेश्चेतिशेषः॥आवापस्थानंआहुतिविशेषप्रक्षेपप्रदेशः॥

सत्यदक्षिणभागे=१

जाठररूपेण=२

भोजातवेदस्त्वद्धीनायावंतोदेवावक्रमतयः संतोममार्थान्प्रतिबध्नंतितेभ्योहमाज्यभागंत्वय्यर्पयामितेचतेनतृप्ताभूत्वासर्वैरपिपुरुषार्थैर्मांतर्पयंत्व
हंचत्वद्धीनोपितइत्याद्यमंत्रस्यार्थः॥जातंजातंवेत्तीतिवाजातेविद्यतइतिवाजातवेदाः यादेवताकुटिलमतिर्भूत्वासर्वस्यैवाहमेवधारयित्रीतिचम

आज्यस्यजुहोत्येतैर्मंत्रैर्यावंतोदेवाइत्यादिभिर्ज्येष्ठायस्वाहाश्रेष्ठायस्वाहेत्यारभ्यद्वेद्वे आहुतीहुत्वासंपातंसंस्रवमवनयतिस्रुवावलेपमाज्यंमं

ज्येष्ठायस्वाहाश्रेष्ठायस्वाहेत्यग्नौहुत्वासंपातमंथेसंस्रवमवनयतिप्राणायस्वाहावसिष्ठायैस्वाहेत्यग्नौहुत्वामंथेसंस्रवमवनयति
वाचेस्वाहाप्रतिष्ठायैस्वाहेत्यग्नौहुत्वामंथेसंस्रवमवनयतिचक्षुषेस्वाहासंपदेस्वाहेत्यग्नौहुत्वामंथेसंस्रवमवनय
तिश्रोत्रायस्वाहायतनायस्वाहेत्यग्नौहुत्वामंथेसंस्रवमवनयतिमनसेस्वाहाप्रजात्यैस्वाहेत्यग्नौहुत्वामंथेसंस्रवमव
नयतिरेतसेस्वाहेत्यग्नौहुत्वामंथेसंस्रवमवनयति॥३२॥अग्नयेस्वाहेत्यग्नौहुत्वामंथेसंस्रवमवनयतिसोमायस्वाहेत्य
ग्नौहुत्वामंथेसंस्रवमवनयतिभूःस्वाहेत्यग्नौहुत्वामंथेसंस्रवमवनयतिभुवःस्वाहेत्यग्नौहुत्वामंथेसंस्रवमवनय
तिस्वःस्वाहेत्यग्नौहुत्वामंथेसंस्रवमवनयतिभूर्भुवःस्वःस्वाहेत्यग्नौहुत्वामंथेसंस्रवमवनयतिब्रह्मणेस्वाहेत्यग्नौहुत्वा
मंथेसंस्रवमवनयतिक्षत्रायस्वाहेत्यग्नौहुत्वामंथेसं थेसंस्रावयति॥३१॥एतस्मादेवज्येष्ठायश्रेष्ठायेत्यादिप्राणलिंगात्

ज्येष्ठश्रेष्ठादिप्राणविदएवास्मिन्कर्मण्यधिकारः॥एतस्मादित्यारभ्य त्वात्मामाश्रित्यवर्ततेतांसर्वसाधनींदेवतामहंघृतस्यधारयाय
जेस्वाहेतिपूर्ववदेवद्वितीयमंत्रार्थः॥२॥ज्येष्ठायेत्यादिमंत्रेषुध्वनितमर्थमाह॥एतस्मादेवेति॥द्वेद्वेआहुतीहुत्वेत्युक्तं॥तत्रसर्वत्रद्वित्वप्रसंगप्र

संस्रवं स्रुवावलिप्तमाज्यं मन्थद्रव्यस्य प्राणदेवतात्वात्प्राणेनैकीकृत्य सर्वात्मकत्वं ॥ ३ ॥ तथा च सर्वे देहेषु प्राणरूपेण त्वं भ्रमदसि प्राणस्य च लनात्मत्वात्तद्रूपत्वाच्च तत्राग्निरूपेण च त्वं ज्वलदसि प्रकाशात्मकत्वादग्नेस्तद्रूपत्वाच्च तदनु ब्रह्मरूपेण त्वं पूर्णमसि नभोरूपेण प्रस्तब्धं निष्कंपम सि सर्वैरविरोधित्वात्त्वमपि जगदेकशफवदात्मन्यंतर्भाव्यापरिच्छिन्नतया ॥ स्थितं वस्तुत्वमेकसभमसि प्रस्तोत्रा यज्ञारंभे त्वमेव हिंकृतमसि ते

एकैकामाहुतिं हुत्वा मंथे संस्रवमवनयत्यपरयोपमंथन्या पुनर्मथ्नाति ॥ ३ ॥ अथैनमभिमृशति भ्रमदसीत्यनेन मंत्रेणाथैनमुद्यच्छति

स्रवमवनयति भूताय स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयति भविष्यते स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयति विश्वा यस्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयति सर्वाय स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयति प्रजापतये स्वाहेत्यग्नौ हुत्वा मं थे संस्रवमवनयति ॥ ३ ॥ अथैनमभिमृशति भ्रमदसि ज्वलदसि पूर्णमसि प्रस्तब्धमस्येकसभमसि हिंकृतमसि हिंक्रिय माणमस्युद्गीथमस्युद्गीयमानमसि श्रावितमसि प्रत्याश्रावितमस्यार्द्रे संदीप्तमसि विभूरसि प्रभुरस्यन्नमसि ज्योतिरसि नि धनमसि संवर्गोसीति ॥ ४ ॥ अथैनमुद्यच्छत्यामंस्यामंहि ते महि ॥ स हि राजेशानोधिपतिः स मां राजेशानोधिपतिं करो

स्त्विति ॥ ५ ॥ अथैनमाचामति तत्सवितुर्वरेण्यमित्याचामति ...

सहपात्रेण हस्तेन गृह्णाति आमंस्यामंहि ते महीत्यनेनाथैनमाचामति भक्षयति ॥ नैव यज्ञमध्ये हिंक्रियमाणं चासि उद्गात्रा च यज्ञारंभे तन्मध्ये उद्गीथमुद्गीयमानं चासि अध्वर्युणा त्वं श्रावितमसि आग्नीध्रेण च प्रत्याश्रावितमसि आर्द्रे मेघोदरे सम्यग्दीप्तमसि विविधं भवतीति विभुः प्रभुः सम र्थो भोग्यरूपेणासोमात्मनास्थितत्वादन्नं भोक्तृरूपेणाग्न्यात्मना ज्योतिः कारणत्वान्निधनं लयोध्यात्माधिदैवयोर्वागादीनामग्न्यादीनां च संहरणात्सं

आमंसित्वंसर्वंविजानासिवयंचतेतवमहिमहत्तरंरूपमामंहिमन्यामहेसहिप्राणोराजादिगुणःसचमांतथाभूतंकरोत्विति उद्यच्छनमंत्रस्या र्थः॥२५॥तत्सवितुर्वरेण्यंवरणीयंश्रेष्ठंपदंधीमहीतिसंबंधः॥वातावायुप्रभेदाःमधुसुखंऋतायतेवहंतिसिंधवोनद्योमधुक्षरंतिमधुरंरसान्स्रवं त्विओषधीश्चास्मान्प्रतिमाध्वीर्मधुररसाःसंतुदेवस्यसवितुर्भर्गःतेजोन्नंवाप्रस्तुतंपदंचिंतयामः॥नक्तंरात्रिरुतोषसोदिवसाश्चमधुप्रीतिकराः

गायत्र्याःप्रथमपादेनमधुमत्यैकयाव्याहृत्याचप्रथमयाप्रथमंग्रासमाचामतितथागायत्र्याद्वितीयपादेनमधुमत्याद्वितीययाद्वितीय याचव्याहृत्याद्वितीयंग्रासंतथातृतीयेनगायत्र्यापादेनतृतीययामधुमत्यातृतीययाचव्याहृत्यातृतीयंग्रासंसर्वांसावित्रींसर्वाश्चमधुम

अथेनमाचामतितत्सवितुर्वरेण्यं॥मधुवाताऋतायतेमधुक्षरंतिसिंधवः॥माध्वीर्नःसंत्वोषधीः॥भूःस्वाहाभर्गोदेवस्यधीमहि॥ मधुनक्तमुतोषसोमधुमत्पार्थिवꣳरजः॥मधुद्यौरस्तुनःपिता॥भुवःस्वाहा॥धियोयोनःप्रचोदयात्॥मधुमान्नोवनस्पतिर्मधु माꣳअस्तुसूर्यः॥माध्वीर्गावोभवंतुनः॥स्वःस्वाहेतिसर्वांचसावित्रीमन्वाहसर्वाश्चमधुमतीरहमेवेदꣳ तीरुक्त्वाहमेवेदंसर्वंभू

यासमितिचांतेभूर्भुवःस्वःस्वाहेतिसमस्तंभक्षयतियथाचतुर्भिर्ग्रासैस्तत्द्रव्यंसर्वंपरिसमाप्यतेतथापूर्वमेवनिरूपयेद्यत्पात्राव लिप्तंतत्पात्रंसर्वंनिर्णिज्यतूष्णींपिबेत्पाणीप्रक्षाल्याप संतुपार्थिवंरजोमधुमद्भुत्हेगकुरमस्तुद्यौश्चपितानोस्माकंमधुसुखंकरोस्तु॥यः सवितानोस्माकंधियोबुद्धीःप्रचोदयात्प्रेरयेत्तस्यतद्वरेण्यमितिसंबंधः॥वनस्पतिःसोमोस्माकंमधुमानस्तु॥गावोरश्मयोदिशोवामाध्वीःसुखकराः संत्वंतशब्दादितिशब्दाच्चोपरिष्टादुक्तेस्तत्रनुषंगः॥एवंग्रासचतुष्टयेपिनिवृत्तेसत्यवशिष्टद्रव्येकिंकर्तव्यंतत्राह॥यथेति॥पात्रावलिप्तस्यपरित्यागंवार

तृतीयं ब्रा० ७

अनुज्ञां करोति १

पाणिप्रक्षालनं वचनसामर्थ्यात्प्राप्तं शुद्ध्यर्थं स्मार्तमाचमनमनुजानाति ॥ अप आचम्येति ॥ एकं पुंडरीक शब्दोः खंडश्रेष्ठवाची ॥ ६ ॥ तमेतं नापुत्राय वा

आचम्य जघनेनाग्निं पश्चादग्नेः प्राक्शिराः संविशति प्रातः संध्यामुपास्यादित्यमुपतिष्ठते दिशामेक पुंडरीकमित्यनेन मंत्रेण यथेतं यथा गतमेत्यागत्य जघनेनाग्निं समासीनो वंशं जपति ॥ ३६ ॥ तं हैतमुद्दालक इत्यादि सत्यकामो जाबालोंतेवासिभ्यः उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिंचेज्जायेरन्नेवास्मिन्छाखाः प्ररोहेयुः पलाशानीत्येवमंतमेनं मंथमुद्दालकात्स्वभृत्यैकैकाचार्यक्रमागतं सत्यकाम आचा

सर्वं भूयासं भूर्भुवः स्वः स्वाहेत्यंततः आचम्य पाणी प्रक्षाल्य जघनेनाग्निं प्राक्शिराः संविशति प्रातरादित्यमुपतिष्ठते दिशामे क पुंडरीकमस्यहं मनुष्याणामेक पुंडरीकं भूयासमिति यथेतमेत्य जघनेनाग्निमासीनो वंशं जपति ॥ ३६ ॥ तं हैतमुद्दा लक आरुणिर्वाजसनेयाय याज्ञवल्क्यायांतेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिंचेज्जायेरञ्छाखाः प्ररोहे युः पलाशानीति ॥ ३७ ॥ एतमु हैव वाजसनेयो याज्ञवल्क्यो मधुकाय पैंग्यायांतेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिंचेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ३८ ॥ योंबहुभ्योंतेवासिभ्यः उक्त्वोवाच किमन्यदुवाचेत्युच्यते अपि य एनं शुष्के स्था

णौ गतप्राणेपि एनं मंथं भक्षणाय संस्कृतं निषिंचेत् प्रक्षिपेज्जायेरन्नुत्पद्येरन्नेवास्मिन्स्थाणौ शाखा अवयवाः तस्य प्ररोहेयुश्च पला शानि पर्णानि यथा जीवतः स्थाणोः किमुतानेन कर्मणा कामः सिध्येदिति ध्रुवफलमिदं कर्मेति कर्मस्तुत्यर्थमेतद्विद्याधिगमे षट् तीर्थानि तेषा मिह सप्राणदर्शनस्य मंथविज्ञानस्याधिगमे द्वे एव तीर्थे अनुज्ञायेते पुत्रश्चांतेवासी च ॥ ३७ ॥ ३८ ॥ त्वर्थमाह ॥ नियेति ॥ शिष्यः श्रोत्रियो मेधावी धनदा

115

चतुरौदुंबरो भवतीति व्याख्यातं दश ग्राम्याणि धान्यानि भवंति ग्राम्याणां तु धान्यानां दश नियमेन ग्राह्याणीत्यवोचाम तान्येतानीति निर्दिश्यंते व्री
हियवास्तिलामाषा अणुप्रियंगवः अणवश्चाणुशब्दवाच्याः क्वचिद्देशे प्रियंगवः प्रसिद्धाः कंगुशब्देन खल्वा निष्पावा वल्लशब्दवाच्या लोके ख

एतमु हैव मधुकः पैंग्यश्चूलाय भागवित्तये ऽन्तेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिंचेज्जायेरं छाखाः प्ररोहेयुः पलाशानी
ति ॥ ३९ ॥ एतमु हैव चूलो भागवित्तिर्जानकय आयस्थूणायान्तेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिंचेज्जायेरं छाखाः प्र
रोहेयुः पलाशानीति ॥ ४० ॥ एतमु हैव जानकिरायस्थूणः सत्यकामाय जाबालायान्तेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ नि
षिंचेज्जायेरं छाखाः प्ररोहेयुः पलाशानीति ॥ ४१ ॥ एतमु हैव सत्यकामो जाबालोऽन्तेवासिभ्य उक्त्वोवाचापि य एनं शुष्के स्थाणौ नि

एषां वै भूतानां पृथिवी रसः पृथिव्या आपोऽपामोषधय ओषधीनां पुष्पाणि पुष्पाणां फलानि फलानां पुरुषः पुरुषस्य रेतः

॥ ४४ ॥ षिंचेज्जायेरं छाखाः प्ररोहेयुः पलाशानीति तमेतं नापुत्राय वानंतेवासिने वा ब्रूयात् ॥ ४२ ॥ चतुरौदुंबरो भवत्यौदुंबरः स्रु
व औदुंबरश्चमस औदुंबर इध्म औदुंबर्यावुपमंथन्यौ दश ग्राम्याणि धान्यानि भवंति व्रीहियवास्तिलमाषा अणुप्रियंगवो गोधूमाश्च
मसूराश्च खल्वाश्च खलुकुलाश्च तान्पिष्टान्दधनि मधुनि घृत उपसिंचत्याज्यस्य जुहोति ॥ ४३ ॥ तृतीयं ब्राह्मणं ॥ ३ ॥ पादरजन्मा यथोत्पा
दितो येन गुणेर्विशिष्टः पुत्र आत्मनः पितुश्च लोक्यो भवतीति

लकुलाः कुलत्थाः एतद्व्यतिरेकेण यथाशक्ति सर्वौषधयो ग्राह्याः फलानि चे
त्यवोचाम अयाज्ञिकानि वर्जयित्वा ॥ ४३ ॥ अष्टमस्य तृतीयं ब्राह्मणभाष्यं ॥ ३ ॥ प्राणोपासकस्य वित्तार्थिनो मंथाख्यं कर्मोक्त्वा ब्राह्मणान्तरमुत्थापयति ॥ या

एतमु हैव मधुकः

उक्तगुणः सकथं स्यादित्यपेक्षायामिति शेषः॥ तच्छब्दो यथोक्तपुत्रविषयः यदस्मिन्ब्राह्मणे पुत्रमंथाख्यं कर्म वक्ष्यते तत्तद्भवति सर्वाधिकारविषय
मित्याशंक्याह॥ प्राणेति॥ पुत्रमंथस्य कालनियमाभावमाशंक्याह॥ यदेति॥ किमत्र गमकमित्याशंक्य रेतःश्रुतिरित्याह॥ इत्येतदिति॥ पृथिव्याः स

तत्त्वं पादनाय ब्राह्मणमारभ्यते प्राणदर्शिनः श्रीमंथं कर्म कृतवतः पुत्रमंथेऽधिकारो यदा पुत्रमंथं चिकीर्षति तदा श्रीमंथं कृत्वा ऋतुका
लं पत्न्याः प्रतीक्षत इत्येतद्ब्रूते तस्य ओषध्यादिरसतमत्वस्तुत्यावगम्यते एषां वै एषां चराचराणां भूतानां पृथिवी रसः सारभूता सर्वभूतानां
मप्येति ह्युक्तं पृथिव्या आपो रसः अप्सु हि पृथिव्योता च प्रोता च अपामोषधयो रसः कार्यत्वाद्रसतमो ओषध्यादीनामोषधीनां पुष्पाणि पुष्पाणां फ

स ह प्रजापतिरीक्षांचक्रे हंतास्मै प्रतिष्ठां कल्पयानीति स स्त्रियꣳ ससृजे ताꣳ सृष्ट्वाध उपास्त तस्मात्स्त्रियमध उपासीत स एतं
प्रांचं ग्रावाणमात्मन एव समुदपारयत्तेनैनामभ्यसृजत्॥ [illegible]॥

लानि फलानां पुरुषः पुरुषस्य रेतः सर्वेभ्योऽङ्गेभ्यस्तेजः संभृतमि
तिश्रुत्यंतराच्च तदेवं सर्वभूतानां सारतममेतद्रेतोऽतः क्वानु खल्वस्य योग्या प्रतिष्ठेति॥ [illegible]॥ स ह स्रष्टा प्रजापतिरीक्षांचक्रे ईक्षां कृत्वा स्त्रियं
ससृजे तां च सृष्ट्वाध उपास्त मैथुनाख्यं कर्माध उपासनं नाम कृतवांस्तस्मात्स्त्रियमध उपासीत श्रेष्ठानुसरणा हि प्रजाः अत्र

वं भूतसारत्वे
मधुब्राह्मणं प्रमाणयति॥ सर्वभूतानामिति तत्र गार्गिब्राह्मणं प्रमाणमित्याह॥ अप्सु हीति॥ अपां पृथिव्याश्च रसत्वं कारणत्वादुक्तं॥ ओषध्यादीनां
कथमित्याशंक्याह॥ कार्यत्वादिति॥ रेतोऽसृजतेति प्रस्तुत्य रेतसस्तत्र तेजःशब्दप्रयोगात्तस्य पुरुषसारत्वमैतरेयके विवक्षितमित्याह॥ सर्वेभ्य इ
ति॥ श्रेष्ठमनुसरंतीति श्रेष्ठानुसरणाः पशुकर्मणि स्वारस्येन प्राणिमात्रस्य प्रवृत्तेर्व्यर्थो विधिरित्याशंक्याह॥ अत्रेति॥ ॥ ॥ ॥

४=उपस्थेंद्रियं　　　　प्रकृष्टगतियुक्तं=३

अवाच्यंकर्मेसप्रस्यर्थः॥४५॥मुष्कौ वृषणौयोनिपार्श्वयोः कठिनौमांसखंडौ तत्राधिषवणशब्दितसोमफलकदृष्टिः॥यच्चानडुहंचर्मेसोमकंडनार्थंत दृष्टिरहस्यदेशस्थेचर्मणिकर्तव्येत्याह॥तावितिं॥उपास्तिप्रकारमुक्त्वाफलोक्तेस्तात्पर्यमाह॥वाजपेयेति॥स्तूयतेमैथुनाख्यंकर्मेतिशेषः॥स्तु

वाजपेयसामान्यकॢप्तिमाह सएतं प्राँच्चमात्मनोग्रावाणंसोमाभिषवोपलस्थानीयंकाठिन्यसामान्यात्प्रजननेंद्रियमुद्पारयदुत्सूरितवा न्लीव्यंजनंप्रतितेनएनांस्त्रियमभ्यसृजत्अभिसंसर्गंकृतवान्॥४५॥तस्यावेदिरित्यादिसर्वंसामान्यंप्रसिद्धंसमिद्धोग्निर्मध्यतःस्त्री व्यंजनस्यनौमुष्कावधिषवणफलकेइतिव्यवहितेनसंबध्यतेवाजपेययाजिनोयावांल्लोकःप्रसिद्धस्तावान्विदुषोमैथुनकर्मणःलोकः

तस्यावेदिरुपस्थोलोमानिबर्हिश्चर्माधिषवणेसमिद्धोमध्यतस्तौमुष्कौसयावान्हवैवाजपेयेनयजमानस्यलोकोभवतितावा नस्यलोकोभवतियएवंविद्वानधोपहासंचरत्यासां स्त्रीणां सुकृतंवृंक्तेथयइदमविद्वानधोपहासंचरत्यास्यस्त्रियःसुकृ तंवृंजते॥४६॥एतद्धस्मवैतद्विद्वानुद्दालकआरुणिराहैतद्धस्मवैतद्विद्वान्नाकोमौद्गल्यआहैतद्धस्मवैतद्विद्वान्कुमारहारि तआह॥

फलमितिस्तूयते॥तस्माद्बीभत्सानकार्येतियएवंविद्वानधोपहासंचरत्यासांस्त्रीणांसुकृतंवृंक्तेआवर्जयत्यपुनर्योवाजपे यसंपत्तिंनजानात्यविद्वान्नेतसोरस्सतमलंचाधोपहासंचरतिआअस्यस्त्रियःसुकृतमावृंजतेअविदुषः॥४६॥एतद्धस्मवैतद्विद्वानुद्दा लकआरुणिराहाधोपहासाख्यंमैथुनकर्मवाजपेयसंपन्नंविद्वानित्यर्थः॥ तिफलमाह॥तस्मादिति॥इतिशब्दःस्तुतिफलदर्शनार्थः॥

उपास्तेरधिकंफलमाह॥यस्यवमिति॥अविदुषोदुर्ग्यापारनिरतस्यप्रत्यवायंदर्शयति॥अथेति॥४६॥अविदुषामतिगर्हितमिदंकर्मेसत्राचार्यपरंप

अविदुषामवाच्येकर्मणिप्रवृत्तानांदोषित्वमुपसंहर्त्तुमितिशब्दः॥विदुषोलाभमविदुषश्चदोषंदर्शयित्वाक्रियाकालात्प्रागेवरेतस्खलनेप्रायश्चि
त्तंदर्शयति॥अथयमिति॥यःप्रतीक्षतेतस्यरेतोयदिस्कंदतीतियोजना॥मेसमायाप्राप्तकालेपद्रेतःपृथिवींप्रत्यस्कांत्सीदृगातिरेकेणस्कन्नमा

तथानाकोमेस्तूल्यःकुमारहारितश्चकिंतआहरित्युच्यते॥बहवोमर्यामरणधर्मिणोमनुष्याब्राह्मणाअयनंयेषांतेब्राह्मणायनाःब्रह्मबं
धवोजातिमात्रोपजीविनइत्येतन्निरिंद्रियाविस्लिष्टेंद्रियाविसुकृतोविगतसुकृतकर्माणोऽविद्वांसोमैथुनकर्मासक्ताइत्यर्थस्तेकि
मस्माल्लोकात्प्रयंतिपरलोकात्सरिअथइतिमैथुनकर्मणोऽस्यंतपापहेतुत्वंदर्शयतियइदमविद्वांसोऽधोपहासंचरंतीतिअथयंकृत्वा

बहवोमर्याब्राह्मणायनानिरिंद्रियाविसुकृतोस्माल्लोकात्प्रयंतियइदमविद्वांसोधोपहासंचरंतीतिबहुवाइदंसुप्तस्यवा
जाग्रतोवारेतःस्कंदति॥४७॥तदभिमृशेदनुवामंत्रयेतयन्मेद्यरेतःपृथिवीमस्कांत्सीद्यदोषधीरप्यसरद्यदपः॥इदम
हंतद्रेतआददेपुनर्मामैत्विंद्रियंपुनस्तेजःपुनर्भगः॥पुनरग्निर्धिष्ण्यायथास्थानंकल्पंतामित्यनामिकांगुष्ठाभ्यामादा
यांतरेणस्तनौवाभ्रुवौवानिमृज्यात्॥४८॥ पत्न्यामृतुकालंब्रह्मचर्येणप्रतीक्षतोयदीदंरेतःस्कंदतिबहुवाअल्पंवासुप्तस्यजाग्र
तोवारागप्राबल्यात्तदभिमृशेदनुमंत्रयेतवाऽनुजपेदित्यर्थः॥यदाभिमृशतितदानामिकांगुष्ठाभ्यांतद्रेतआदत्तेआददइत्येवमंतेनमं
त्रेणपुनर्मामित्येतेननिमृज्यादंतरेणमध्येभ्रुवौभ्रुवौवास्तनौस्तनयोर्वा॥४८॥ स्तीदोषधीःप्रतिअप्यसरदगमतयच्चापःस्वयोनिंप्रतिगतम
भूत्तदिदंरेतःसंप्रत्याददेहमित्यादानमंत्रार्थः॥केनाभिप्रायेणतदादानंतदाह॥पुनरिति॥यस्तुनारेतोरूपेणबहिर्निर्गतमिंद्रियंमांप्रत्येतुसमागच्छतु

१२७

२९ निर्गमनात्तदात्मनाबहिर्निर्गतं सन्तंप्रत्यागच्छतुअग्निर्धिष्ण्यंस्थानंयेषांतेदेवास्तद्रेतोयथास्थानंकल्पयंत्वितिमार्जनमंत्रार्थः॥५८॥अपोनौरेतस्त्व
२७ लनेप्रायश्चित्तमुक्तं॥रेतोयोनावुदकेरेतःसिचश्छायादर्शनेप्रायश्चित्तंदर्शयति॥अथयदित्यादिना॥निमित्तांतरेप्रायश्चित्तांतरप्रदर्शनप्रक्रमार्थोथशब्दः

अथयदिकदाचिदुदकेआत्मानमात्मच्छायांपश्येत्तत्राप्यभिमंत्रयेतानेनमंत्रेणमयितेजइतिश्रीर्हवाएषापत्नीस्त्रीणांमध्येयद्यस्मान्मलोद्वा
साउद्धूतगलवद्वासास्तस्मात्तांमलोद्वाससंयशस्विनींश्रीमतीमभिक्रम्याभिगत्योपमंत्रयेदिदमद्यावाभ्यांकार्यंयस्मात्साहनमितिनिरा
क्रांतआप्लुता॥५९॥साचेदस्मैनदद्यान्मैथुनंकर्तुंकाममेनामवक्रीणीयादाभरणादिनाज्ञापयेत्तथापिसानैवदद्यात्काममेनांयष्ट्यावापा

अथयद्युदकआत्मानंपरिपश्येत्तदभिमंत्रयेतमयितेजइंद्रियंयशोद्रविणंसुकृतमितिश्रीर्हवाएषास्त्रीणांयन्मलोद्वासा
स्तस्मान्मलोद्वाससंयशस्विनीमभिक्रम्योपमंत्रयेत॥६॥साचेदस्मैनदद्यात्काममेनामवक्रीणीयात्साचेदस्मैनैवदद्यात्का
ममेनांयष्ट्यावापाणिनावोपहत्यातिक्रामेदिंद्रियेणतेयशसायशआददइत्ययशाएवभवति॥६॥साचेदस्मैदद्यादिंद्रियेण
तेयशसायशआदधामीतियशःस्विनावेवभवतः॥८॥ णिनावोपहत्यातिक्रामेन्मैथुनायसत्यामित्तांदुर्भगांकरिष्यामीतिप्रख्या
प्यतामनेनमंत्रेणोपगच्छेदिंद्रियेणतेयशसायशआददइतिसातदभिशापाद्बंध्यादुर्भगेतिख्याताअयशाएवभवति॥५०॥साचेदस्मैद
द्यादनुगुणाएवस्यात्तदानेनमंत्रेणोपगच्छेदिंद्रियेणतेयशसायशआदधामीतितदायशस्विनावेवोभावपिभवतः॥५१॥ ॥मयितेजःप्रभृति
देवाःकल्पयंत्वितिमंत्रयोजना॥प्रकृतेनरेतःसिचायस्यांपुत्रोजनयितव्यस्तांस्त्रियंस्तौति॥श्रीरित्यादिना॥कथंसायशस्विनीजहितस्याःख्यातिरस्तित्राह॥५ २७

ज्ञापयेदात्मीयं प्रेमातिरेकमिति शेषः॥ बलादेव वशीकृतां भार्यां पशुकर्मार्थं कथमुपगच्छेदित्याकांक्षायामाह॥ स यामिति॥ ११॥ भर्तुर्भार्यावशीकरण
प्रकारमुक्त्वा पुरुषद्वेषिण्यास्तस्यास्तद्विषये प्रीतिसंपादनक्रियां दर्शयति॥ स यामित्यादिना॥ हे रेतस्त्वं मदीयात्सर्वस्मादंगात्संभवसि अतस्त्वं विशेषतश्च
हृदयादन्नरसद्वारेण जायसे स त्वमंगानां कषायो रसः सन्विषलिप्तशरविद्धां मृगीमिवामूं मदीयां स्त्रियं मे मादय मद्वशां कुर्वित्यर्थः॥ १२॥ तस्याः स्ववि

षयां स्वभार्यामिच्छेदियं मां कामयेतेति तस्यामर्थं प्रजनने इंद्रियं निष्ठाय निक्षिप्य मुखेन मुखं संधायोपस्थमस्या अभिमृश्य जपेदि
दं मंत्रमंगादंगादिति॥ १२॥ अथ यामिच्छेन्न गर्भं दधीतेति न धारयेत गर्भिणी मा भूदिति तस्यामर्थमिति पूर्ववदभिप्राण्याभिप्राणनं

स यामिच्छेत्कामयेत मेति तस्यामर्थं निष्ठाय मुखेन मुखं संधायोपस्थमस्या अभिमृश्य जपेदंगादंगात्संभवसि हृदयादधि
जायसे स त्वमंगकषायोऽसि दिग्धविद्धामिव मादयेमाममूं मयीति॥ १२॥ अथ यामिच्छेन्न गर्भं दधीतेति तस्यामर्थं निष्ठाय मुखेन
मुखं संधायाभिप्राण्यापान्यादिंद्रियेण ते रेतसा रेत आदद इत्यरेता एव भवति॥ १३॥ अथ यामिच्छेद्दधीतेति तस्यामर्थं निष्ठाय
मुखेन मुखं संधायापान्याभिप्राण्यादिंद्रियेण ते रेतसा रेत आदधामीति गर्भिण्येव भवति॥ १४॥ प्रथमं कृत्वा पश्चादपान्यादिंद्रियेण

ते रेतसा रेत आदद इत्यनेन मंत्रेणारेता एव भवति न गर्भिणी भवतीत्यर्थः॥ १३॥ अथ यामिच्छेद्दधीत गर्भमिति तस्यामर्थमित्यादि पूर्ववत्पू
र्वविपर्ययेणापान्याभिप्राण्यादिंद्रियेण ते रेतसा रेत आदधामीति गर्भिण्येव भवति॥ १४॥ यद्यप्रीतिमापाद्यावाच्यकर्मान्तस्थानदशायामभिप्राय
विशेषानुसारेणानुष्ठानविशेषं दर्शयति॥ अथेत्यादिना॥ तत्र तत्राथशब्दस्तत्तदुपक्रमार्थो नेतव्यः॥ पशुकर्मकाले प्रथमं स्वकीयपुंस्त्वहारानदीयस्त्री

बृ.र. २८

भर्तुरेवाभिप्रायांतरानुसारिणं विधिमाह॥ अथयामित्यादिना॥ स्वकीयपंचमेंद्रियेण तदीयपंचमेंद्रियाद्रेतः सीत्कृत्य तस्माद्गोत्पत्तिसमर्थं कृत मितिमत्वा स्वकीयरेतसा सह तस्मिन्निक्षिपेत्तदिदमपाननं प्राणनं च तत्पूर्वकं रेतःसेचनं॥ १०॥ संप्रति प्रासंगिकमाभिचारिकं कर्म कथयति॥ अथपुनरितिः॥ द्वेषवतानुष्ठितमिदं कर्मफलवदितिवक्तुं द्विष्यादित्यधिकारिविशेषणं॥ आमविशेषणं पात्रस्य प्रकृतकर्मयोग्यत्वख्यापना

अथपुनर्यस्यजायायैजारः उपपतिः स्यात्तं चेत् द्विष्यादभिचरिष्याम्येनमितिमन्येत तस्येदं कर्मामपात्रेऽग्निमुपसमाधाय सर्वं प्रति लोमं कुर्यात्तस्मिन्नग्नावेताः शरभृष्टीः शरेषीकाः प्रतिलोमाः सर्पिषाक्ताः घृताभ्यक्ता जुहुयान्मम समिद्धेहौषीरित्याद्या आहुतीः

अथयस्यजायायैजारःस्यात्तं चेद्द्विष्यादामपात्रेऽग्निमुपसमाधाय प्रतिलोमꣳशरबर्हिस्तीर्त्वा तस्मिन्नेताः शरभृष्टीः प्रति लोमाः सर्पिषाक्ता जुहुयान्मम समिद्धेहौषीः प्राणापानौत आददेऽसाविति मम समिद्धेहौषीः पुत्रपशूꣳस्त आददेऽसावि ति मम समिद्धेहौषीरिष्टासुकृते त आददेऽसाविति मम समिद्धेहौषीराशापराकाशौ त आददेऽसाविति स वा एष निरिंद्रियो विसुकृदस्माल्लोकात्प्रैति यमेवंविद्ब्राह्मणः शपति तस्मादेवंविच्छ्रोत्रियस्य दारेण नोपहासमिच्छेदुत ह्येवंवित्परो भवति॥ १२॥

तेसर्वासामसाविति नामग्रहणं प्रत्येकं सर्वाः एवं विद्यं ब्राह्मणः शपति स विसुकृतो विगतपुण्यकर्मा प्रैति तस्मादेवंविच्छ्रोत्रियस्य दारे णनोपहासमिच्छेन्नर्मापि न कुर्यात्किमुताधोपहासं हि यस्मा र्थं॥ अग्निमित्येकवचनादुपसमाधानवचनाच्चावसथ्याग्निरत्र विवक्षितः॥ सर्वं प रिस्तरणादि तस्य प्रतिलोमत्वे कर्मणः प्रतिलोमत्वं हेतुः कर्तव्यं॥ ममसमृद्धे योषाग्नौ यौवनादिना समिद्धे रेतो हुतवानसि ततो परा धिनस्तव प्राणापाना वा

अ॰ ६

रामः २८

तदंते वासा वियात्मनः शत्रोर्वा नाम गृह्णीयात् ॥ दृष्टं श्रौतं कर्म सुकृतं स्मार्तं आशा प्रार्थना ॥ वाचा यत्स्तुतिज्ञातं कर्मणा नोपपादितं तस्य प्रतीक्षा परा काशः ॥ य
थोक्तहोमद्वारा शापदानस्य फलं दर्शयति ॥ तस्य इति ॥ एवं विलं मंथकर्मद्वारा प्राणविद्याबलं तस्मादेवं विदियत्रैवं विलं परदारगमने यथोक्तदोष

देवं विदपि तावसरो भवति शत्रुर्भवतीत्यर्थः ॥ ४५ ॥ अथ यस्य जायामार्तवं विंदेत् तु भावः प्राप्नुयादित्येवमादिर्ग्रंथः श्रीर्ह वा एषा स्त्रीणा मि
लतः पूर्वं द्रष्टव्यः ॥ स्नानर्ध्या त्र्यहं कंसेन पिबेदहतवासा अस्याः नैनां स्नातां च वृषलो वृषली वा नोपहन्यात्नोपस्पृशेत् त्रिरात्रांते त्रिरा

अथ यस्य जायामार्तवं विंदेत् त्र्यहं कंसेन पिबेदहतवासा नैनां वृषलो न वृषल्युपहन्यात् त्रिरात्रांत आप्लुत्य व्रीहीनवघातयेत् ॥ ४६ ॥
स य इच्छेत्पुत्रो मे शुक्लो जायेत वेदमनुब्रुवीत सर्वमायुरियादिति क्षीरौदनं पाचयित्वा सर्पिष्मंतमश्नीयातामीश्वरौ जनयितवै
॥ ४७ ॥ अथ य इच्छेत्पुत्रो मे कपिलः पिंगलो जायेत द्वौ वेदावनुब्रुवीत सर्वमायुरियादिति दध्योदनं पाचयित्वा सर्पिष्मंतमश्नी
यातामीश्वरौ जनयितवै ॥ ४८ ॥ त्र्यहं तस्मा आप्लाव्याप्लुत्य स्नात्वा अहतवासाः स्यादिति यद्वहितेन संबंधः स्नातामाप्लुतां व्रीहीनवघातयेद् व्री
हीनवघातायतामेव नियुंज्यात् ॥ ४६ ॥ स य इच्छेत्पुत्रो मे शुक्लो वर्णतो जायेत वेदमेकमनुब्रुवीत सर्वमायुरियादृषभंतं क्षीरौदनं पाचयित्वा
सर्पिष्मंतमश्नीयातामीश्वरौ समर्थौ जनयितवे जनयितुं ॥ ४७ ॥ दध्योदनं दध्ना चरुं पाचयित्वा हविर्दचेदिकृतिपुत्रं ॥ तदेवमशननियमः ॥ ४८ ॥

आनर्तेत क्रयोपात्तं हेवंतरमाह ॥ स्नानंतर्ध्यामीति ॥ आभिचारिकं कर्म प्रसंगागतमुक्त्वा पूर्वोक्तमृतुकालं ज्ञापयति ॥ अथेति ॥ श्रीर्ह वा एषा स्त्रीणा मि
त्यपेक्ष्याप्यूर्ध्वं ॥ पाठक्रमादर्थक्रमस्य बलवत्त्वेऽत्र समाह ॥ स्नानर्ध्यादिति ॥ अर्थवशादिति मानत ॥ ४६ ॥ किं पुनरवघातनिष्पन्नैस्तंडुलैरत इष्टं यंत

बृ॰ उ॰ २९

बलदेवसादृश्यं वा शुद्धत्वं वा शुक्लत्वं स्वाभाविकमोदनं पाचयतिवेत्किमर्थमुदकग्रहणं तद्व्यतिरेकेणोदनपाकासंभवादित्याशंक्याह॥ उदकग्रहणमिति॥ क्षीरादेरिति शेषः॥ वेदविषयमेव पांडित्यं किं न स्यादत आह॥ वेदइति॥ समितिं विद्वत्सभां तां गच्छतीति विद्वान् वोच्यते

केवलमेव स्वाभाविकमोदनमुदकग्रहणमन्यप्रसंगनिवृत्त्यर्थं॥ ५९॥ दुहितुः पांडित्यं गृहकृत्यविषयमेव वेदेऽनधिकारात्तिलौदनं कृसरं॥ ६०॥ विविधं गीतो विजिगीतः प्रख्यात इत्यर्थः समितिंगमः सभां गच्छतीति प्रगल्भ इत्यर्थः॥ पांडित्यस्य पृथग्ग्रहणा

अथ य इच्छेत्पुत्रो मे श्यामो लोहिताक्षो जायेत त्रीन्वेदाननुब्रुवीत सर्वमायुरियादित्युदौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै॥ ५९॥ अथ य इच्छेद्दुहिता मे ———— पंडिता जायेत सर्वमायुरियादिति तिलौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै॥ ६०॥ अथ य इच्छेत्पुत्रो मे पंडितो विजिगीतः समितिंगमः शुश्रूषितां वाचं भाषिता जायेत सर्वान्वेदाननुब्रुवीत सर्वमायुरियादिति मांसौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवा औक्षेण वार्षभेण वा॥ ६१॥

न शुश्रूषितां श्रोतुमिष्टां रमणीयां वाचं भाषिता संस्कृताया अर्थवत्या वाचो भाषितेत्यर्थः॥ मांसमिश्रमोदनं मांसौदनं तन्मांसनियमार्थमाह औक्षेण वा मांसेन उक्षा सेचनसमर्थः पुंगवस्तदीयं मांसमृषभस्ततोऽप्यधिकवयास्तदीयं मांसमार्षभं॥ ६१॥ अथाभिप्रातरेव काले मितिचेत्स्याह॥ पांडित्यस्येति॥ सर्वशब्दो वेदचतुष्टयविषयः॥ औक्षेणेत्यादितृतीया सहार्थे देशविशेषापेक्षया कालविशेषापेक्षया वा मांसनियमः॥ ६१॥ अथशब्दस्तु पूर्ववाक्येष्वप्यनुवृत्तिविकल्पार्थः॥ कदापुनरिदमोदनपाक

अ॰ ६ ब्रा॰ ४

रामः २९

सं९८

कोसौस्थालीपाकविधिः कथंवातत्रहोमस्तत्राह॥ गार्ह्यइति॥ गृह्येप्रसिद्धोगार्ह्यः॥ अत्रेतिप्रत्ययमंथकर्मोक्तिः॥ अतोमङ्गार्यातःसकाशाङ्गोविश्वाव सोगंधर्वत्वत्प्रतिष्ठान्यांचजायांप्रफय्येतरुणींपत्यासहसंक्रीडमानामिच्छाहंपुनःस्वामिमांजायांसमुपैमीतिमंत्रार्थः॥ अभिपत्तिरालिंगनं॥ कदाक्षीरौ

दनवघातनिर्वृत्तांस्तंडुलानादाययस्थालीपाकारत्तास्थालीपाकविधिनाज्यंचेष्टित्वाज्यसंस्कारंकृत्वाचरुंश्रपयित्वास्थालीपाकस्याहुतीर्जुहोति उपघातंउपहत्योपहत्यअग्नयेस्वाहेत्याद्याःगार्ह्यःसर्वोविधिर्द्रष्टव्योत्रमंत्रतोहुत्वोद्धृत्यचरुशेषंप्राश्नातिस्वयंप्राश्येतरस्याःपत्न्यैप्रय

अथाभिप्रातरेवस्थालीपाकावृत्ताज्यंचेष्टित्वास्थालीपाकस्योपघातंजुहोत्यग्नयेस्वाहानुमतयेस्वाहादेवायसवित्रेसत्यप्रसवा यस्वाहेतिहुत्वोद्धृत्यप्राश्नातिप्राश्येतरस्याःप्रयच्छतिप्रक्षाल्यपाणीउदपात्रंपूरयित्वातेनैनांत्रिरभ्युक्ष्योत्तिष्ठातोविश्वावसो न्यामिच्छप्रफर्व्यं॥ संजायांपत्यासहेति॥९८॥ अथैनामभिपद्यतेमोहमस्मिसात्वंसात्वमस्यमोअहंसामाहमस्मिऋक्त्वंद्यौरहं पृथिवीत्वंताचेहिसंरभावहैसहरेतोदधावहैपुंसेपुत्रायवित्तयइति॥९८॥ कृत्यच्छिष्टंप्रक्षाल्यपाणीआचम्योदपात्रंपूरयित्वा तेनोदकेनैनांत्रिरभ्युक्ष्यत्यनेनमंत्रेणउत्तिष्ठातइतिसकृन्मंत्रोच्चारणमथैनामभिमंत्र्यक्षीरौदनादियथापत्यकामंभुक्तेतिक्रमोदृष्टव्यःसं वेशनकालेःमोहमस्मीत्यादिमंत्रेणाभिपद्यते॥९८॥ दनादिभोजनंतदाह॥ क्षीरेति॥ भुक्त्वाभिपद्यतइतिसंबंधः॥ अहंपतिरमःप्राणोस्मिसात्वंवा गसिकथंनत्वप्राणत्वंवाक्त्वमित्यार्थंकथनाचःप्राणाधीनत्वयत्त्वमदधीनत्वादित्यभिप्रेत्यसात्वमित्यादिपुनर्वचनं॥ ऋगाधारंहिसामगीयते॥ अस्तिचमदाधा रत्वंतवत्यापममसामत्वमृक्त्वंचतवद्यौरहंपितृत्वात्पृथिवीत्वंमातृत्वात्तयोर्गानापितृत्वसिद्धेरित्यर्थः॥ तावावांसंरभावहैसंरंभमुद्यमंकरवावहैएहिसमाग

ऊर्वोः संबोधनं द्यावापृथिवी इति॥ विजिहाथां विश्लिष्टे भवेथां यावाभित्यर्थः॥ विष्णुर्व्यापनशीलो भगवान्भवत्या योनिं कल्पयतु पुत्रोत्पत्ति समर्थां करोतु त्वष्टा सविता तव रूपाणि पिंशतु विभागेन दर्शनयोग्यानि करोतु॥ प्रजापतिर्विराडात्मा मदात्मना स्थित्वा त्वयि रेतः समासिंचतु प्रक्षिपतु॥ धाता पुनः सूत्रात्मा त्वदीयं गर्भं त्वदात्मना स्थित्वा धारयतु पुष्णातु॥ सिनीवाली दर्शाहर्दैवता त्वदात्मना वर्तते सा च पृथुष्टुका विस्तीर्णस्तुतिर्भो सिनीवालि पृथुष्टु

अथास्या ऊरू विहापयति विजिहाथां द्यावापृथिवी इत्यनेन तस्या मर्थं मित्यादि पूर्ववत्त्रिरेनां शिरः प्रभृत्यनुलोमामनुमार्ष्टि विष्णुर्योनिमि

अथास्या ऊरू विहापयति विजिहाथां द्यावापृथिवी इति तस्या मर्थं निष्ठाय मुखेन मुखꣳ संधाय त्रिरेनामनुलोमामनुमार्ष्टि विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिꣳशतु॥ आसिंचतु प्रजापतिर्धाता गर्भं दधातु ते गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ॥ ६॥ हिरण्मयी अरणी याभ्यां निर्मंथतामश्विनौ तं ते गर्भꣳ हवामहे दशमे मासि सूतये॥ यथाग्निगर्भा पृथिवी यथा द्यौरिंद्रेण गर्भिणी॥ वायुर्दिशां यथा गर्भ एवं गर्भं दधामि तेसाविति॥ ६७॥ सोष्यंतीमद्भिरभ्युक्षति॥ त्यादि प्रसिसंत्रं अंते नाम गृह्णाति असाविति तस्याः॥ ६४॥ सोष्यंतीमद्भिरभ्युक्षति॥ प्रसवकाले सुखप्रसवनार्थमनेन मंत्रेण यथा वातः पुष्करिणीं समिंगयति सर्वतः॥ के गर्भमिमं धेहि धारय॥ अश्विनौ देवौ सूर्याचंद्रमसौ स्वकीय रश्मिमालिनौ तव गर्भं मदात्मना स्थित्वा समाधत्तां ज्योतिर्मय्यावरणी प्रागासतुर्याभ्यां गर्भमश्विनौ निर्मथितवंतौ तं तथाभूतं गर्भं ते जठरे दधावहे॥ दशमे मासि प्रसवार्थं साधीयमानं गर्भं दृष्टांतेन दर्शयति॥ यथेति॥ द्यौः इंद्रेण सूर्येणेति यावत्॥ असाविति पत्युर्वा निर्देशस्तस्या नाम गृह्णातीति पूर्वेण संबंधः॥ स

एवातेएवमेवतेतत्रस्वरूपोपघातमकुर्वन्नेजतुगर्भश्चलतुजरायुणागर्भवेष्टनेनमांसखंडेनसहावैतुनिर्गच्छतु॥इंद्रस्यप्राणस्यायंव्रजोमार्गःसर्गी
कालेगर्भाधानकालेवाकृतः॥सार्गलइत्यस्यव्याख्यासपरिश्रयइतिपरिवेष्टनेनजरायुणासहितइत्यर्थः॥तंमार्गंप्राप्यत्वमिंद्रगर्भेणसहनिर्जहिनि
र्गच्छ॥गर्भनिःसरणानंतरंयामांसपेशीनिर्गच्छतिसावरांतांनिर्गमयेत्यर्थः॥९९॥घृतमिश्रंदधिपृषदाज्यमित्युच्यते॥उपघातमित्यभीक्ष्ण्येपौनःपुन्यं

एवातेगर्भएजत्विति॥९९॥अथजातकर्मंजातेग्निमुपसमाधायांकेआधायपुत्रंकंसेपृषदाज्यंसन्नीयसंयोज्यदधिघृतेपृषदाज्यस्योपघातं

यथावायुःपुष्करिणींसमिंजयतिसर्वतः॥एवातेगर्भएजतुसहावैतुजरायुणा॥इंद्रस्यायंव्रजःकृतःसार्गलःसपरिश्रयः॥तमिंद्र
निर्जहिगर्भेणसावरांसहेति॥९९॥जातेग्निमुपसमाधायांकआधायकंसेपृषदाज्यंसन्नीयपृषदाज्यस्योपघातंजुहोत्यस्मि
न्सहस्रंपुष्यासमेधमानःस्वेगृहेअस्योपसद्यांमाछैत्सीत्प्रजयाचपशुभिश्चस्वाहा॥मयिप्राणांस्त्वयिमनसाजुहोमिस्वाहा॥यत्क
र्मणात्यरीरिचंयद्वान्यूनमिहाकरंअग्निष्टत्स्विष्टकृद्विद्वान्स्विष्टंसुहुतंकरोतुनःस्वाहेति॥१०॥अथास्यदक्षिणंकर्णमभिनिधा
यवाग्वागितित्रिरथदधिमधुघृतं जुहोति॥अस्मिन्सहस्रंइत्याद्याचापस्थाने॥१०॥अथास्यदक्षिणंकर्णमभिनिधायस्वंमुखंवाग्वा

विवक्षितंपृषदाज्यस्याल्पमादायपुनःपुनर्जुहोतीत्यर्थः॥अस्मिन्स्वेगृहेपुत्ररूपेणवर्धमानोमनुष्याणांसहस्रंपुष्यासमनेकमनुष्यपोषकोभूयासमस्यमस्य
स्योपसद्यांसंततौप्रजयापशुभिश्चसहश्रीर्माविछिन्नाभूयादित्याह॥अस्मिन्निति॥मयिपितरियेप्राणाःसंतितान्पुत्रेत्वयिमनसासमर्पयामीत्याह॥यदिति॥
अत्यरीरिचमितिअतिरिक्तंकृतवानस्मिइहकर्मण्यकरमकरवंतत्सर्वंविद्वानग्निःस्विष्टंकरोत्वितिस्विष्टकृद्भूत्वास्विष्टमनधिकंसुहुतमन्यूनंचास्माकंकरोत्वित्य

२.२
३१

न्यीलक्षणावात्क पिप्रविशतितिजपतोभिप्रायः॥एतैर्मंत्रैर्भूस्त्वेदधामीत्यादिभिरितिशेषः॥वेदनाम्नाव्यवहारोलोकेनास्तीत्याशंक्याह॥तदस्येति॥य
तद्वेदइतिनामतस्यगुह्यंभवतिवेदनंवेदोनुभवःसर्वस्यनिजस्वरूपमित्यर्थः॥हेसरस्वतियस्तेस्तनःशशयःशयःफलंतेनसहवर्त्तमानोयश्चसर्वेप्राणि
नांस्थितिहेतुरन्नभावेनजातोयश्चरत्नधाअन्नस्यपयसोवाधातायश्चवसुकर्मफलंतद्विंदतीतिवसुविद्यश्चसुष्टुददातीतिसुदत्रोयेनचस्तनेनविश्वा वि

अथदधिमधुघृतंसंनीयानंतर्हितेनान्यवहितेनजातरूपेणहिरण्येनप्राशयतिभूस्त्वयिदधामीत्येतैर्मंत्रैःप्रत्येकं॥अथास्यनामधेयंकरो
तिवेदोसीति॥तदस्यतद्गुह्यंनामभवतिवेदइति॥अथैनंमात्रेप्रदायस्तनंप्रयच्छतियस्तेस्तनइत्यादिमंत्रेण॥७०॥अथास्यमातर

संनीयानंतर्हितेनजातरूपेणप्राशयति॥भूस्त्वेदधामिभुवस्त्वेदधामिस्वस्त्वेदधामिभूर्भुवःस्वःसर्वंत्वयिदधामीति॥६८॥
अथास्यनामकरोतिवेदोसीतितदस्यतद्गुह्यमेवनामभवति॥६९॥अथैनंमात्रेप्रदायस्तनंप्रयच्छतियस्तेस्तनःशशयो
योमयोभूर्योरत्नधावसुविद्यःसुदत्रः॥येनविश्वापुष्यसिवार्याणिसरस्वतितमिहधातवेकरिति॥७०॥ मभिमंत्रयतेइलासि॥

स्यनेनतंवाएतमाहुरित्यनेनविधिनाजातःपुत्रःपितरंपितामहंवाअतिशेतेइतिश्रियायशसाब्रह्मवर्चसेनपरमांनिष्ठांप्राप्रदित्येवं
स्तुत्योभवतीत्यर्थः॥ वार्याणिवरणीयानिदेवादीनिभूतानित्वंपुष्यसितंस्तनंमदीयपुत्रस्यधातवेपानायमदीयभार्यास्तनेप्रविष्टंकुर्वित्यर्थः
॥७०॥इलासुत्सा॥मैत्रावरुणाभ्यांसंभूतोमैत्रावरुणोवसिष्ठस्तस्यभार्यामैत्रावरुणीसाचारुंधतीतद्रूपात्वमसीतिभार्यासंबोधयति॥वीरेवीरवति
णीति॥वीरेपुरुषेवायिनिमित्तभूतेभवतीवीरंपुत्रमजीजनत्॥सात्वंवीरवतीजीवबहुपुत्राभवयाभवतीवीरवतःपुत्रसंपन्नानस्मानकरत्तवसीतिमंत्र

रामः
३१

अहोमहानेषविस्मयोयत्पितरंपितामहंचसर्वमेववंशमतीत्यसर्वस्मादधिकः।त्वंजातोसीत्यर्थः॥नकेवलंपुत्रस्यैवेयंस्तुतिरपितुयथोक्तपुत्रसंपन्न
स्यपितुरपीत्याह॥परमेति॥२८॥ इतिश्रीबृहदारण्यकेअष्टमाध्यायेचतुर्थंब्राह्मणं॥४॥ सांनिध्यात्खिलकांडस्यवंशोयमितिशंकांनिवर्तयन्वंशब्राह्म
णतात्पर्यमाह॥अथेति॥विद्याभेदातीतस्यकांडद्वयस्यप्रत्येकंवंशभाक्त्वेपिनास्यपृथगभागित्वंखिलत्वेनतच्छेषत्वात्तथाचसमाप्तौपठितोवंशःसम

यस्यचैवंविदोब्राह्मणस्यपुत्रोजायतेसचैवंस्तुत्योभवतीत्यध्याहार्यं॥७१॥ इतिश्रीमद्बृहदारण्यकेअष्टमाध्यायेचतुर्थंब्राह्मणंसमाप्तं॥४

अथास्यमातरमभिमंत्रयतइलासिमैत्रावरुणीवीरेवीरमजीजनत्सात्वंवीरवतीभवयास्मान्वीरवतोकरदितितंवाएत
माहुरतिपितावताभूरतिपितामहोवताभूःपरमांवतकाष्ठांप्रापच्छ्रियायशसाब्रह्मवर्चसेनयएवंविदोब्राह्मणस्यपुत्रोजा
यतइति॥७१॥इतिचतुर्थंब्राह्मणं॥५॥अथवंशः।पौतिमाषीपुत्रःकात्यायनीपुत्रात्कात्यायनीपुत्रोगौतमीपुत्राद्गौतमी
पुत्रोभारद्वाजीपुत्राद्भारद्वाजीपुत्रःपाराशरीपुत्रात्पाराशरीपुत्रऔपस्वस्तीपुत्रादौपस्वस्तीपुत्रःपाराशरीपुत्रात्पाराशरीपुत्रः
कात्यायनीपुत्रात्कात्यायनीपुत्रःकौशिकीपुत्रात्कौशिकीपुत्रआलंबीपुत्राच्चवैयाघ्रपदीपुत्राच्चवैयाघ्रपदीपुत्रःकाण्वीपुत्राच्च
कापीपुत्राच्चकापीपुत्रः॥७२॥ अथेदानींसमस्तप्रवचनवंशःस्त्रीप्राधान्याद्गुणवान्पुत्रोभवतीतिप्रस्तुतं॥अतःस्त्रीविशेषणेनैवपुत्र
विशेषणादाचार्यपरंपराकीर्त्यतेतानीमानिशुक्लानीत्यस्मामिश्राणिब्राह्मणेन स्तस्यैवप्रवचनस्यभविष्यतीत्यर्थः॥पूर्वोवंशोपुरुषविशेषितो
तृतीयस्तुस्त्रीविशेषितःतत्रकिंकारणमित्याशंक्याह॥स्त्रीप्राधान्यादिति॥तदेवस्फुटयति॥गुणवानिति॥कोसंतेब्राह्मणेनेतिसंबंधः॥शुक्लानियजूंषीत

132

बृ.र. ३२

अयातयामान्यदुष्टान्यगतार्थानीत्यर्थः॥ पाठक्रमेणमन्त्रव्यादिप्रजापतिपर्यंतोवंशोव्याख्यातः संप्रत्यर्थक्रममाश्रित्याह॥ प्रजापतिमिति॥ अधोमुखत्वंपा ठक्रमापेक्षयोच्यते॥ तत्रापिप्रजापतिमारभ्यसांजीवीपुत्रपर्यंतंवाजसनेयिशाखासुसर्वास्वेकोवंशइत्याह॥ समानमिति॥ प्रवचनाख्यस्यवंशात्मनोब्राह्मणः

अयातयामानीमानियजूंषिशुक्लानीत्येतत्॥ प्रजापतिमारभ्ययावत्सौतिमाषीपुत्रस्तावदधोमुखोनियताचार्यपर्वक्रमोवंशः॥ ब्रह्मणः

आत्रेयीपुत्रादात्रेयीपुत्रोगौतमीपुत्राद्गौतमीपुत्रोभारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रोवात्सीपुत्राद्वात्सीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रोवार्कारुणीपुत्राद्वार्कारुणीपुत्रोवार्कारुणीपुत्राद्वार्कारुणीपुत्रआर्तभागीपुत्रादार्तभागीपुत्रः शौंगीपुत्राच्छौंगीपुत्रः सांकृतीपुत्रात्सांकृतीपुत्रआलंबायनीपुत्रादालंबायनीपुत्रआलंबीपुत्रादालंबीपुत्रोजायंतीपुत्राज्जायंतीपुत्रोमांडूकायनीपुत्रान्मांडूकायनीपुत्रोमांडूकीपुत्रान्मांडूकीपुत्रः शांडिलीपुत्राच्छांडिलीपुत्रोराथीतरीपुत्राद्राथीतरीपुत्रोभालुकीपुत्राद्भालुकीपुत्रः क्रौंचिकीपुत्राभ्यांक्रौंचिकीपुत्रौवैदभृतीपुत्राद्वैदभृतीपुत्रः कार्षकेयीपुत्रात्कार्षकेयीपुत्रः प्राचीनयोगीपुत्रात्प्राचीनयोगीपुत्रः सांजीवीपुत्रात्सांजीवीपुत्रः प्राश्नीपुत्रात्प्राश्नीपुत्रआसुरायणादासुरायणआसुरेरासुरिः॥ ३२॥ प्रवचनाख्यस्यवंशैतद्ब्रह्मप्रजापतिप्रबंधपरंपरयागतास्मास्वनेकधाविप्रसृतमनाद्यनंतंस्वयंभु ब्रह्मनित्यं तस्मैब्रह्मणेनमः॥ संबंधात्प्रजापतिर्विद्यालब्धवानित्याह॥

ब्रह्मणइति॥ तस्याधिकारिभेदादवांतरभेदंदर्शयति॥ तद्वेति॥ प्रजापतिप्रमुखप्रबंधः प्रपंचः सैवपरंपरातयेतियावत्॥ तस्यपरमात्मरूपंस्वयंभूत्वमभिदधाति॥ अनादीति॥ तस्यापौरुषेयत्वेनासंभावितदोषतयाप्रामाण्यमभिप्रेत्यविशिनष्टि॥ नित्यमिति॥ आदिमध्यांतेष्वकृतमंगलाग्रंथाः प्रचारिणोभवं

रामः ३२

हूँ ४

बृ.
३३

नमोजन्मादिसंबंधविघ्नविध्वंसहेतवे॥हरयेपरमानंदपरिज्ञानवपुर्भृते॥१॥नमस्तेयंतसंदोहसरसीरुहभानवे॥गुरवेपरपक्षौघध्वांतध्वंसप

नयस्तदनुवर्तिभ्योगुरुभ्यः॥२५॥ॐ॥हरिः ॐतत्सदितिश्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविंदभगवत्पूज्यपादशिष्यश्रीमच्छं

याज्ञवल्क्याद्याज्ञवल्क्यउद्दालकादुद्दालकोरुणादरुणउपवेशेरुपवेशिःकुश्रेःकुश्रिर्वाजश्रवसोवाजश्रवाजिह्वावतो

बाध्योगाज्जिह्वावान्बाध्योगोसितादृर्षगणादसितोवार्षगणोहरितात्कश्यपाद्धरितःकश्यपःशिल्पात्कश्यपाच्छि

ल्पःकश्यपःकश्यपान्नैध्रुवेःकश्यपोनैध्रुविर्वाचोवागम्भिण्याअंभिण्यादित्यादादित्यानीमानिशुक्लानियजूंषिवाजसनेये

नयाज्ञवल्क्येनाख्यायंते॥३४॥समानमासांजीवीपुत्रात्सांजीवीपुत्रोमांडूकायनेर्मांडूकायनिर्मांडव्यान्मांडव्यःकौत्सात्कौत्सो

माहित्थेर्माहित्थिर्वामकक्षायणाद्वामकक्षायणःशांडिल्याच्छांडिल्योवात्स्याद्वात्स्यःकुश्रेःकुश्रिर्यज्ञवचसोराजस्तंबायनाद्यज्ञ

वचाराजस्तंबायनस्तुरात्कावषेयात्तुरःकावषेयःप्रजापतेःप्रजापतिर्ब्रह्मणोब्रह्मस्वयंभुब्रह्मणेनमः॥३५॥ ॥पंचमंब्राह्म

णं॥५॥इतिश्रीमद्बृहदारण्यकेषष्ठोध्यायः॥६॥ मूल२०० ॥ भाष्य५०० ॥ टीका५०० ॥

१२३

करभगवत्पूज्यपादकृतौश्रीबृहदारण्यकवृत्तौअष्टमाध्यायेपंचमंब्राह्मणंअष्टमोध्यायःसमाप्तः ॥ ८ ॥ ॥ ॥ ॥ ॥ ॥

दीयसे॥२॥ ॥ हरिः ॐतत्सदितिश्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानंदपूज्यपादशिष्यश्रीमद्भगवदानंदज्ञानकृतायांश्रीमद्बृहदार

ण्यभाष्यटीकायांअष्टमोध्यायःसमाप्तः ॥समाप्तश्चायंग्रंथः ॥ ॥ वाराणसीप्रसादस्यनियोगेनप्रयत्नतः॥काशीसंस्कृतमुद्रायामंकितोयंशिलाक्षरैः॥१॥श्रीका

शीजीमेमहल्लेहौदकटोरा श्रीयुतबाबूवाराणसीप्रसादजीकेमकानमे काशीसंस्कृतमुद्रायंत्रमेछपी जिनकोलेनाहोय उनकों उक्तस्थानमे श्रीबाबूवाराणसीप्रसादजीकेपास या कचौरी

गलीमे भाई प्रतापसिंहजीके दुकानपरमिलेगी संवत् १९४१ श्रावणशुक्ल १० ताः १ माहे अगस्त ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

२२

